॥ श्रीः ॥

श्रीनिवासपंडितविरचितः

# रागतत्त्वविबोधः ।

एतत्पुस्तकम्

पुण्यपत्तनस्थपंडितदत्तात्रेयकेशवजोशीत्यभिधेन

यथामति संशोधितम् ।

तच्च

## भालचन्द्रशर्मणा

आर्यभूषणाख्यमुद्रालये मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतम् ।

शकः १८४० सन् १९१८

अस्य ग्रन्थस्य मुद्रणे यद्धनमपेक्षितं तत्सकलमपि
श्रीमन्महीशूरयुवराजमहाशयैः ' सर के. नरसिंह–
राज वडियार जी. सी. आय्. ई. '
इति लक्षणांकितैः परमो–
दारचरितैरदायि ।

Printed at the Arya-Bhushan Press, Poona, City.
by Anant Vinayak Patvardhan,

AND

Published by Bhalchandra Sitaram Sukthankar, M. A, LL. B.,
at 2 Malabar Hill, Bombay.

# प्रस्तावना.

आर्यसंगीतसंस्कृतग्रंथकारांमध्यें श्रीनिवासपंडिताचें नांव फारसें ऐकण्यांत येत नाहीं; याचा रागतत्त्वविबोध हा एकच ग्रंथ सध्यां उपलब्ध आहे.

ग्रंथकारानें या ग्रंथांत आपली व आपल्या वाडवडिलांची माहिती, तसेंच आपलें ठावठिकाण, आपले आश्रयदाते यांसंबंधाचा उल्लेख कोठेंहि केला नाहीं; त्यामुळें हा ग्रंथकार केव्हां झाला व तो कोठें प्रसिद्धि पावला ह्याबद्दल आज कांहींच सांगतां येत नाहीं.

त्याचा हा ग्रंथ म्हणजे अहोबलपंडिताच्या संगीतपारिजात ग्रंथांतील स्वर व रागप्रकरणांची संकलितआवृत्तिच आहे असें म्हटल्यास फारसें वावगें होईलसें वाटत नाहीं.

अहोबलपंडित हा सतराव्या शतकाच्या पूर्वार्धांत झाला असावा हें अनुमान बऱ्याचश्या पुराव्यावरून निघूं शकतें, तेव्हां सदर श्रीनिवास पंडित हा सतराव्या शतकाच्या उत्तरार्धांत झाला असें मानणें फारसें चुकीचें होणार नाहीं.

श्रुतिस्वरांची अभिन्नता स्पष्टपणें सांगणें, शुद्ध व विकृत मिळून द्वादश स्वरांचीं स्थानें तारेच्या लांबीनें नमूद करणें वगैरे पारिजातकाराच्या विशेष गोष्टींचा उल्लेख ह्या ग्रंथकारानें प्रमुखपणें करून पारिजातकाराचे राग कांहीं त्याच्या शब्दानें व कांहीं आपल्या शब्दानें नमूद केले आहेत. श्रीनिवासाचें प्राचीन संगीतशास्त्राचें ज्ञान अगदींच बेताचें होतें असें त्याच्या ग्रंथावरून सहज दिसून येतें; उदाहरणार्थ—पारिजातांतील गौरी रागाचें लक्षण व सदर ग्रंथांतील गौरी रागाचें लक्षण हीं ताडून पाहिलीं असतां आमच्या म्हणण्याची सत्यता सहजीं कळून येईल.

पारिजातांत उद्ग्राह, स्थायी, संचारी व मुक्तायी असे भाग करून स्वरविस्तार लिहिले आहेत. तेच ग्रंथकारानें येथें उतरून घेतले आहेत; पण वाचकांस त्यांचा विशेषसा उपयोग होणार नाहीं म्हणून ते सर्व न देतां नुसता त्यांपैकीं उद्ग्राह हा भाग दिला आहे, ग्राम व स्वर यांविषयीं यानें आपलें मत स्पष्ट नमूद केलें आहे; व तसेंच पारिजातकाराची भाषा जेथें संदिग्ध होती तो भाग ह्यानें आपल्या भाषेनें स्पष्ट करून दाखविला आहे हें त्याच्या शुद्धस्वरस्थानांकडे पाहिलें असतां सहज दिसून येईल.

एकंदरींत हा ग्रंथ उत्तरपद्धति समजून घेणारास बराच उपयोगी होईल असें आमचें मत आहे.

सदर ग्रंथाची हस्तलिखितप्रत आमचे मित्र डॉ. वि. सी. सुकथनकर, एम्. ए., पीएच्. डी. यांनीं मिळवून दिल्याबद्दल आम्ही त्यांचे फार आभारी आहों.

पुणें
ता० २२।६।१८ } **पं. दत्तात्रेय केशव जोशी.**

॥ श्रीः ॥

# रागतत्त्वविबोधः।

श्रीगणेशाय नमः ।

नत्वा लक्ष्मीपतिं देवं भरतादिमुनीनपि ।
रागतत्त्वविबोधाय वक्ष्ये संगीतलक्षणम् ॥ १ ॥
सकलाः सकला विद्याः श्रीनिवासो विभाव्य च ।
कलारत्नस्य गानस्य तत्त्वतो लक्षणं ब्रुवे ॥ २ ॥
नृत्यवाद्यविशेषाभ्यां गानं चेदुपबृंहितम् ।
तदा संगीतमित्याहुर्लक्ष्यलक्षणकोविदाः ॥ ३ ॥
गीतवादित्रनृत्यानां यस्मादंग्यंगता भवेत् ।
गानं केवलमप्याहुः संगीतं लक्ष्यवेदिनः ॥ ४ ॥
गानोपयोगिनां तावदुद्देशः क्रियतेऽधुना ।
अनिष्टाननुबंधीष्टसाधनत्वे विवेकतः ॥ ५ ॥
प्रवर्तन्ते जनाः सर्वे इति शास्त्रविनिश्चयः ।
महानिष्टानुबंधीष्टसाधनत्वविवेकिनाम् ॥ ६ ॥
कथं भवेन्निषिद्धत्वात् प्रवृत्तिर्गानकर्मणि ।
प्रदृश्यन्ते मया वेदाः पूर्वपक्षार्थसिद्धये ॥ ७ ॥

तस्माद्गायन्तं स्त्रियः कामयन्ते कामुका एनं स्त्रियोवन्ति । तस्माद्गायन्तस्य मत्तस्य न प्रतिगृह्यम् । यत्प्रतिगृह्णीयात् । समबलं प्रतिगृह्णीयात् । इति गाननिषेधप्रतिपादकश्रुतयः ॥ तथा विधेश्च सिद्धत्वात्तात्पर्यं मृग्यतेऽधुना । अपवाये तस्मात् श्रीराष्ट्रं क्रामति।योऽश्वमेधेन जायते । ब्राह्मणौ वीणा गाथिनौ

गायतः श्रिया वा एतद्रूपं यद्वीणा। श्रियमेवास्मिंस्तद्वतः।
यदा खलु वै पुरुषः। श्रियमश्नुते वीणास्मै वाद्यते। तदाहुः।
यदुभौ ब्राह्मणौ गायेताम्। प्रभ्रष्टकास्माद्यीस्मात् न वै ब्राह्मणो
श्रीरमते इति। ब्राह्मणोऽन्यो गायेत्। राजन्योऽन्यः। ब्रह्म
वै ब्राह्मणः। क्षत्रो राजन्यः। तथा हास्य ब्रह्मणा च क्षत्रेण
चोभयतः परिगृहीता भवति। तदाहुः। यदुभौ दिवा गाये-
ताम्। अपास्माद्राष्ट्रं क्रामेत्। न वै ब्राह्मणे राष्ट्रं रमेत्। इति।
यदा खलु वै राजा कामयते। अथ ब्राह्मणं जिनाति। दिवा
ब्राह्मणो गायेत्। नक्तं राजन्यः। ब्रह्मणो वै रूपमहः।
क्षत्रियस्य रात्रिः। तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतो
राष्ट्रं परिगृहीतं भवति। इत्यददाह इत्ययजथा इत्यपचत इति।
ब्राह्मणो गायेत्। इष्टापूर्तं वै ब्राह्मणस्य इष्टापूर्तेनैवैनं स
समर्धयति। इत्यजिना इत्ययुध्यथा इत्यमुं संग्राममहन्निति
राजन्यःयुध्यं वै राजन्यस्य। युद्धेनैवैनं समर्धयति! अक्लृप्ता
वा एतस्यर्तव इत्याहुः। योऽश्वमेधेन यजत इति। तिस्रोन्यो
गायति। तिस्रोन्यः षट्संपद्यते। षड् वा ऋतवः। ऋतूनेवास्मै
कल्पयतः ताभ्यां संस्थाभ्यां अनोयुक्तेश्च शते च ददाति। शतायुः
पुरुषेन्द्रियः। आयुष्ये वैन्द्रिय प्रतिष्ठति। इति श्रुतयः।

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः।
तालज्ञश्चाप्रयासेन मोक्षमार्गं निगच्छति ॥ ८ ॥

इति याज्ञवल्क्यस्मृतिः।

शृण्वन् सुभद्राणि रथांगपाणे—
जन्मानि कर्माणि च यानि लोके।
गीतानि नामानि तदर्थकानि
गायन् विलज्यो विचरेदसंगः ॥ ९ ॥

नाहं वसामि वैकुंठे योगिनां हृदये रवौ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥ १० ॥

इति भागवतादिवचनानि।

असद्गानपराः सर्वा निंदास्ता वैदिका मताः ।
ईश्वरो गीयते यस्मै तद्गानं वेदबोधितम् ॥ ११ ॥
संगीतं ध्वनिसंभूतिः श्रुतयो जातयस्तथा ।
शुद्धाः स्वरा विकाराद्याः स्वरस्थानानि सर्वशः ॥ १२ ॥
संवाद्यादि स्वराणां च भेदा ग्रामस्य लक्षणम् ।
मूर्छना लक्षणं चापि गमकानां च लक्षणम् ॥ १३ ॥
रागमेलाश्च सर्वेऽपि संपूर्णत्वादिभेदिनः ।
तत्तन्मेलस्थरागाणां भेदकारणलक्षणम् ॥ १४ ॥
ताना उद्ग्राहभूताश्च स्थायी तानाः सुनिर्मलाः ।
संचारीतानकथनं समासिद्योतकं तथा ॥ १५ ॥
एतावंतश्च वस्तूनि ग्रंथेऽस्मिन्कथितानि हि ।
आयुर्वेदेन संप्रोक्ता योगशास्त्रेण चोदिता ॥ १६ ॥
पिंडसंस्था मया नोक्ता पिष्टपेषणताभिया ।
नाभिहृत्कंठमूर्धास्यस्थानोत्पन्नो ध्वनिर्मतः ॥ १७ ॥
तिसृपूर्ध्वासु नाडीषु नाड्यस्तिर्यङ्समन्विताः ।
द्व्यधिका विंशतिस्ताभ्यः श्रुतयस्तत्समा मताः ॥ १८ ॥
जातयस्तत्र पंच स्युर्वक्ष्यमाणाभिधायुताः ।
स्वरेभ्यः श्रुतयोऽभिन्नाः श्रावणत्वेन हेतुना ॥ १९ ॥
अहिकुंडलवत्तत्र व्यवहारोऽपि युज्यते ।
सजातिश्रुतिनामानि ब्रुवे शिक्षोक्तमार्गतः ॥ २० ॥
अथ दीप्ता च तीव्रायां कुमुद्वत्यां तथायता ।
मंदायां च मृदुर्ज्ञेया मध्या छंदोवतीश्रिता ॥ २१ ॥
करुणा च दयावत्यां मध्या सा रंजनी स्मृता ।
रक्तिकायां भवेज्जातिर्मृदुसंज्ञा ततः परम् ॥ २२ ॥
रौद्र्यां दीप्ता च क्रोधायामायताख्या प्रकीर्तिता ।
वज्रिकायां तु दीप्ता स्यात् प्रसारिण्यां तथायता ॥ २३ ॥

प्रीत्यां श्रुत्यां मृदुः प्रोक्ता मध्या सा मार्जनीश्रिता ।
क्षित्यामुक्ता मृदुर्जातिर्मध्या रक्ता समाश्रिता ॥ २४ ॥
संदीपिन्यां तथा श्रुत्यामायता जातिरीरिता ।
आलापिन्यां तथा श्रुत्यां करुणाजातिरुच्यते ॥ २५ ॥
मदंत्यां करुणा ज्ञेया रोहिण्यामायता स्थिता ।
रम्यां मध्याश्रिता जातिरिति सूरिविनिश्चयः ॥ २६ ॥
उग्रायां च भवेद्दीप्ता मध्या तां क्षोभिणीं श्रिता ।
इक्षुक्षीरगतं यद्वन्माधुर्यं नोच्यते जनैः ॥ २७ ॥
तद्वत् श्रुतिगता जातिर्वाचा को वा वदिष्यति ।
श्रोत्रप्रत्यक्षसिद्धास्ता भिन्नश्रुतिसमाश्रिताः ॥ २८ ॥
परस्परं स्वसादृश्यं जातयः समुपाश्रिताः ।
अवांतरभिदा युक्ता जातिभेदैश्च शोभिताः ॥ २९ ॥
स्वरस्थाने क्रियाभेदैर्वैचित्र्यं जायते बहु ।
जातिभेदे समव्याप्तं यत्तज्ज्ञेयं मनीषिभिः ॥ ३० ॥

इति श्रुतिजातिविवेकः ।

चतुःश्रुतिसमायुक्ताः स्वराः स्युः समपाभिधाः ।
गनी श्रुतिद्वयोपेतौ रिधौ त्रिश्रुतिकौ मतौ ॥ ३१ ॥
स्वतो रंजयति स्वान्तं यः स नादः स्वरो मतः ।
निषादर्षभगांधारषड्जमध्यमधैवताः ॥ ३२ ॥
पंचमश्चेत्यमी सप्त तंत्री कंठोत्थिताः स्वराः ।
इत्यादीनि च नामानि स्वराणामुदितानि हि ॥ ३३ ॥
वीणायास्ते स्वराः कंठात्प्रभवन्ति सुखप्रदाः ।
शिख्यादिध्वनिसंघास्ते तेषां मध्ये परस्परम् ॥ ३४ ॥
षड्जादित्वमुपेताः स्युरिति भावो मयोदितः ॥

---

## अथ स्वरस्थानलक्षणम् ।

### अथ शुद्धस्वराः ।

स्वरस्य हेतुभूताया वीणायाश्चाक्षुषत्वतः ।
तत्र स्वरविबोधार्थं स्थानलक्षणमुच्यते ॥ ३५ ॥
पूर्वोत्ययोश्च मेर्वोश्च मध्ये तारकसः स्थितः ।
तदर्धेत्वातितारस्य सस्वरस्य स्थितिर्भवेत् ॥ ३६ ॥
मध्यस्थानादिमषड्जमारभ्यातारषड्जगम् ।
सूत्रं कुर्यात्तदर्धे तु स्वरं मध्यममाचरेत् ॥ ३७ ॥
भागत्रयसमायुक्तं तत्सूत्रं कारितं भवेत् ।
पूर्वभागद्वयादग्रे स्थापनीयोऽथ पंचमः ॥ ३८ ॥
षड्जपंचममध्ये तु गांधारस्थानमाचरेत् ॥
षड्जपंचमगं सूत्रमंशत्रयसमन्वितम् ।
तत्रांशद्वयसंत्यागात् पूर्वभागे तु रिर्भवेत् ॥ ३९ ॥
पंचमोत्तरषड्जाख्यमध्ये धैवतमाचरेत् ॥
पसयोर्मध्यभागे स्यात् भागत्रयसमन्विते ।
पूर्वभागद्वयं त्यक्त्वा निषादो राजते स्वरः ॥ ४० ॥

इति शुद्धस्वराः ।

---

### अथ विकृतस्वराः ।

भागत्रयोदिते मध्ये मेरोर्ऋषभसंज्ञितात् ।
भागद्वयोत्तरं मेरोः कुर्यात् कोमलरिस्वरम् ॥ ४१ ॥
मेरुधैवतयोर्मध्ये तीव्रगांधारमाचरेत् ॥
भागत्रयविशिष्टेऽस्मिन् तीव्रगांधारषड्जयोः ।
पूर्वभागोत्तरं मध्ये मं तीव्रतरमाचरेत् ॥ ४२ ॥
भागत्रयान्विते मध्ये पंचमोत्तरषड्जयोः ।
कोमलो धैवतः स्थाप्यः पूर्वभागे विवेकिभिः ॥ ४३ ॥

तथैव धसयोर्मध्ये भागत्रयसमन्विते ।
पूर्वभागद्वयादूर्ध्वं निषादं तीव्रमाचरेत् ॥ ४४ ॥

---

ऋषभः शुद्ध एवासौ पूर्वगांधार इष्यते ।
गांधारः शुद्ध एवासौ रिस्तीव्रतर इष्यते ॥ ४५ ॥
अतितीव्रतमो गः स्यान्मध्यमः शुद्ध एव हि ।
धैवतः शुद्ध एवासौ निषादः पूर्वसंज्ञकः ॥ ४६ ॥
निषादः शुद्ध एवासौ धस्तीव्रतर इष्यते ॥

इति विकृतस्वराः ।

इति स्वरस्थानलक्षणम् ।

स्वरज्ञानविहीनेभ्यो मार्गोऽयं दर्शितो मया ।
स्वरसंवादिता ज्ञानं स्वरस्थापनकारणम् ॥ ४७ ॥
यतः संवादिनां तेषां ततो लक्ष्म मयोच्यते ।
द्वादशश्रुतिभिस्ते स्युरष्टाभिः समपाभिधाः ॥ ४८ ॥
व्यवधानमिता यस्मात्तस्मात्संवादिनः स्मृताः ।
अमात्यः स्यात्तु संवादी वादी राजसमो मतः ॥ ४९ ॥
भृत्यतुल्योऽनुवादी स्याद्विवादी शत्रुवद्भवेत् ।
वादी राजन्ययोगः स्यात्प्रयोगे बहुलत्वतः ॥ ५० ॥
अमात्याः स्युः स्वरा रक्तिकारणातिसमन्विताः ।
परोपजीविहेतुत्वं रक्तिं प्रति सभृत्यवत् ॥ ५१ ॥
रक्तिविच्छेदकारित्वाद्विवाद्वित्वं स्वरो गतः ॥

इति वाद्यादिलक्षणम् ।

स्वरः स्वोत्तरगामी चेत्तीव्रादिवचनोदितः ।
स्वरोऽग्रिमश्रुतिं याति तीव्रसंज्ञां प्रयात्ययम् ॥ ५२ ॥
स्वरोऽग्रिमश्रुती याति तदा तीव्रतरो भवेत् ।
स्वरोऽग्रिमश्रुतीर्याति तदा तीव्रतमो मतः ॥ ५३ ॥

चतस्रः श्रुतयो यस्मिन्नधिकाः स्युर्यदा स्वरः ।
अतितीव्रतमश्चेति आप्नोतीति विदो जगुः ॥ ५४ ॥
स्वरः पश्चान्निवृतश्चेत् कोमलादिभिरीरितः ।
एकः श्रुतिपरित्यागात्स्वरः कोमलसंज्ञकः ॥ ५५ ॥
श्रुतिद्वयपरित्यागात् पूर्वशब्देन भण्यते ॥

इति स्वरसंज्ञाप्रकारः ।

गांधारमध्यमग्रामावप्रयोजनकौ मतौ ॥
आरोहणावरोहाभ्यां स्वरा ये सरिगादयः ।
मूर्छिताः स्युः क्रमात्तेषां षड्जग्रामस्त्वयोग्यता ॥ ५६ ॥
आरोहश्चावरोहश्च स्वराणां जायते यदा ।
तां मूर्छनां तदा लोक आहुर्ग्रामाश्रयां बुधाः ॥ ५७ ॥
सप्तसंख्यायुतास्ताः स्युस्तासां नामानि कुर्महे ।
तत्र तूत्तरमंद्राद्या षड्जपूर्वकसंभवा ॥ ५८ ॥
द्वितीया रजनी प्रोक्ता निषादस्वरपूर्विका ।
धैवतादिस्वरोद्भूता तृतीयाचोत्तरायता ॥ ५९ ॥
चतुर्थी शुद्धषड्जा स्यात्पंचमादिस्वरोद्भवा ।
मत्सर्याद्याकृताख्या सा पंचमी मध्यमोत्थिता ॥ ६० ॥
अश्वक्रांतानुषड्जा स्याद्गांधारादिस्वरोदिता ।
ऋषभादिस्वरोद्भूता सप्तम्याख्याभिरुद्गता ॥ ६१ ॥
आरोहश्चावरोहश्च तथैव विकृतेष्वपि ।
षाडवौडुवरीत्यात्र कुर्यादारोहणादिकम् ॥ ६२ ॥
मध्यषड्जं समारभ्य तदूर्ध्वस्वरमाव्रजन् ।
पूर्वैकैकस्वरं त्यक्त्वा समारोहादिरुह्यताम् ॥ ६३ ॥
तथारोहणपूर्वस्य भेदा ज्ञेया मनीषिभिः ।
स्वरातींद्रियधर्माणां कथने गौरवं भवेत् ॥ ६४ ॥

इति मत्वा न ते प्रोक्ता अन्यग्रंथोदिता यतः ।
गौरवादेवमेवादिकीर्तनं न कृतं मया ॥ ६५ ॥
इति ग्राममूर्छनाप्रकरणम् ।

---

अथ गमकाः ।

क्रियाविशेषजन्यो यस्तद्धर्मो गमको भवेत् ।
गमयन्ति हि तद्रक्तिं तस्मात्ते गमका मताः ॥ ६६ ॥
दक्षिणांगुलिसंबद्धतंत्रीजन्योऽतिनिश्चलः ।
कंपादिरहितत्वेन स्वरः कैवल्यमश्नुते ॥ ६७ ॥
स्वरो हुंशब्दसादृश्यात् हुंकृतः परिकीर्तितः ।
स्फालनस्थानविज्ञाताज्ञातमध्यबहुस्वरः ॥ ६८ ॥
पुनरग्रे समुद्भूतोप्येकास्फालनसंभवः ।
शारीरोऽपि स हुंशब्दो हन्यस्ते चिबुके भवेत् ॥ ६९ ॥
उन्नतस्थानसंजातोऽप्यधो गच्छति यः स्वरः ।
अधः पुनः समुद्भूतोऽज्ञातमध्यगतस्वरः ॥ ७० ॥
एकास्फालनसंभूतश्चावितस्वर उच्यते ।
च्यवनं जायते यस्मात्तस्माच्चेच्याविता मताः ॥ ७१ ॥
शारीरोऽपि सविज्ञेयो वदनोत्क्षेपणोद्भवः ।
एकत्रास्फालनादेव सर्वे ते बोधिता यदा ॥ ७२ ॥
स्वरौ नष्टावभिव्याप्य तदोद्घर्षणमुच्यते ।
अवघर्षमप्येवं ज्ञेयं लक्ष्मविचक्षणैः ॥ ७३ ॥
विकर्षणं तदेव स्यात् स्वस्थानेऽन्यो विकृष्यते ।
स्वरस्याभिभवं नैम्न्यमंगुल्याहुर्मनीषिणः ॥ ७४ ॥
इतिपूर्वाहताख्यः स्यात्तथैवान्वर्थनामकः ।
हताहत इति ख्यातो इत्यैकत्रस्वरद्वयम् ॥ ७५ ॥
हतो ताराहताख्योऽपि गमकोऽन्वर्थशोभितः ।
चतुर्थांशोऽपरेभ्योऽसौ द्रुतस्य तिरिपो भवेत् ॥ ७६ ॥

श्रुतिकालविभागेन एवं बहुविधा मताः ।
एकत्र मन्यते यस्तु द्विवारं स द्विराहतः ॥ ७७ ॥
आरोहणावरोहाभ्यां द्विधा स परिकीर्तितः ।
स्वरद्वयमभिव्याप्य वामहस्तांगुलिक्रिया ॥ ७८ ॥
भवेदूर्ध्वमधो याति तज्ज्ञो ढालुरुदाहृतः ।
स्वरत्रयमभिव्याप्य सुढालुः पूर्ववद्भवेत् ॥ ७९ ॥
यत्रैकहननादूर्ध्वं तत्रैवानाहताः स्वराः ।
शांतसंज्ञायुतास्ते स्युः स्फुरिताः सूरिनिर्णयः ॥ ८० ॥
हुंफितस्यैकदेशित्वान्मुदा न पृथगुच्यते ।
अग्रे गत्वा निवृत्तोऽसौ पुनः स्वस्थान उच्यते ॥ ८१ ॥
पश्चाद्गत्वा निवृत्तोऽसौ अग्रस्वस्थानसंस्थितः ।
एवं लक्षणसंयुक्ता गमका बहवो मताः ॥ ८२ ॥
न ते मयोदिता ग्रंथविस्तरातिभियाऽधुना ॥

इति गमकाः ॥

---

## अथ मेललक्षणम् ।

मेलः स्वरसमूहः स्याद्रागव्यंजनशक्तिमान् ।
श्लिष्टोच्चारणमेवात्र समुदायः प्रकीर्तितः ॥ ८३ ॥
शुद्धैः स्वरैः समस्तैर्यो युक्तः संपूर्णशब्दभाक् ।
षड्भिः षाडव इत्युक्तः स्वरैः पंचभिरौडुवः ॥ ८४ ॥
एवं मेलस्त्रिधा प्रोक्तो विकृतैश्च स्वरैरिह ।
शुद्धसंपूर्णमेलस्य भेद एक उदाहृतः ॥ ८५ ॥
तत्रैकैकस्वरत्यागात् षाडवः षड्विधो मतः । ६
पंचाधिकदशत्वं हि स्वरद्वयवियोगतः ॥ ८६ ॥ १५

इति मेललक्षणम् ।

षाडवेषु च पूर्णेषु मेलेषु सकलेषु च ।
आरोहे चावरोहे च स्वरत्यागसमन्विताः ॥ ८७ ॥

मूर्छनाभेदसंपन्ना गमकादिव्यवस्थया ।
व्यवस्थिताः श्रुतिस्थानयोग्यजातिभिदायुजः ॥ ८८ ॥
रागा अप्यमिताः प्रोक्ता लक्ष्यलक्षणकोविदैः ॥
युगपद्द्वयाविश्लिष्टाः स्वरयोरौडुवा यदि ।
न तथा रंजकास्ते स्युस्तथाप्यत्र मयोदिताः ॥ ८९ ॥

इत्येकैकषाडवसंपूर्णमेलेषु रागबाहुल्यकथनम् ॥

अथ शुद्धस्वरैरेव शुद्धैर्ये विकृतैरपि ।
निर्मिता विकृतैरेव तेषां लक्षणमुच्यते ॥ ९० ॥
आदावुद्गृह्यते येन स तानोद्ग्राहसंज्ञकः ।
आद्यंतयोश्चानियमस्ताने यत्र प्रजायते ॥ ९१ ॥
स्थायी तानः स विज्ञेयो लक्ष्यलक्षणकोविदैः ।
संचारी स तु विज्ञेयः स्थाय्यारोहाविमिश्रितः ॥ ९२ ॥
यत्र रागस्य विश्रांतिः समाप्तिद्योतको हि सः ॥

---

## अथ रागलक्षणानि ।

शुद्धमेलोद्भवः पूर्णो धैवतादिकमूर्छनः ।
आरोहे गनिवर्ज्यः स्यात् रागः सैंधवनामकः ॥

धसरि मपम गरिस निधधस ॥ इत्युद्ग्राहः ॥
धसरि ममगरिरि पप्प मगरिरि नीधपमगरिरिग
रिसनिध धस ॥ इति स्थायी ॥ धससरिस
ममपपधसा मगरिरिगरिस निधपधमप धमपमा
गरिस रिममगरिरिपप्प मगरिरि
पमगरि मगरिगरिस रिस निध धसस्स ॥

इति संचारी ॥ सास्सधसा । रिमपनि धप मप
धम पामपामगरि । गारिगारिसरी सनीधधसा ।
॥ इति मुक्तायी ॥

इति सैंधवः ॥ १ ॥

नीलांबरी तु संपूर्णा षड्जपूर्वकमूर्छना ।
शुद्धमेले समुद्भूता बहुकंपमनोहरा ॥

सरिगमपधनिसा । निधपमगरिसा ॥ इतित्युद्ग्राहः ॥
गग्गगरि । ममरि ग ग गा रिगरीसरिस । ससपप्पमपप्प
मपधनिधप मपधनिसा निधपमप धनिधप मपधनिमागग
रिरिसरिस ॥ इति स्थायी ॥ ससरिग मपप्प निन्निनिधनि
निधसस्सनिध । निन्निधप । धध्धपम । पप्पमगा मम्मरिम ।
गरिगसरिस ॥ इति संचारी ॥ ससपापमप धनिसा गारिसग्गा
रिसनिधपमा । पमपमा । गागरिसा रिसा ॥ इति मुक्तायी ॥

इति नीलांबरी ॥ २ ॥

आरोहे रिधहीना स्यात्पूर्णा शुद्धस्वरैर्युता ।
गांधारस्वरपूर्वा स्यात् धनाश्रीर्मध्यमांतका ॥

गमपधनीस गरीसा निधपमागा गमपम गमगरिसा ॥इत्युद्ग्राहः।

इति संपूर्णधनाश्रीः ॥ ३ ॥

अथ तु धहीना सा रिधहीनापि सा मता ।

गमपनिसा रिपमगमगप निपमग गमगरिस । गमप
गम गरिस गरिस रिस । पनिस गरिस रिस निस ।
॥ इत्युद्ग्राहः ॥

इति षाडवधनाश्रीः ॥ ४ ॥

गमपनिस सनिपमग । मगमपगमगस । पनिस गसनिसपनि
सस । गमगपम गा सममग । सगस निसस ॥ इत्युद्ग्राहः ॥

इति औडुवधनाश्रीः ॥ ५ ॥

रिहीना मालवश्रीः स्याच्छुद्धमेलस्वरोद्भवा ।
मध्यमादिस्वरोद्ग्राहा धांशयुक्तान्त्यपा स्मृता ॥
ममगसानिसा । पमप निनिस समगस निनि धप धप
ममपा ममागसा ॥ इत्युद्ग्राहः ॥

इति मालवश्रीः ॥ ६ ॥

गहीनो रक्तहंसः स्यात् आरोहे निस्वरोज्झितः ।
अवरोहे धवर्जः स्यात् षड्जपूर्वकमूर्छनः ॥
सरिमपधस सनिपमरिस ॥ इत्युद्ग्राहः ॥

इति रक्तहंसः ॥ ७ ॥

मोज्झितः कोल्हासः स्याद्गांधारादिकमूर्छनः ।
अवरोहे धवर्जः स्यात् षाडवः परिकीर्तितः ॥
गपधनिस रिगनिस निप गपगरिस ॥ इत्युद्ग्राहः ॥

इति कोल्हासः ॥ ८ ॥

षड्जादिमूर्छनोपेतः प्रसभः पंचमोज्झितः ।
सरिगमधनिस निधमगरिस ॥ इत्युद्ग्राहः ॥

इति प्रसभः ॥ ९ ॥

गधवर्जो मध्यमादिर्मध्यमादिकमूर्छना ।
मपनिस रिसरिस निसनिप मपनिपम पमरिम **रिस** ।
॥ इत्युद्ग्राहः ॥

इति मध्यमादिः ॥ १० ॥

रिणा युक्तः कोमलेन मेघनादस्तु षाडवः ।
सस्वरादिस्वरारब्धो मवर्ज्योऽपि रिगांशकः ॥
मरिग पधनिस सनिधप पगगगरिस ॥ इत्युद्ग्राहः ॥

इति मेघनादः ॥ ११ ॥

षड्जपूर्वा तु तोडी स्यात् यत्रोक्तौ कोमलौ रिधौ ।
धैवताख्यस्वरो न्यासो गांधारोंऽश इतीरितः ॥
सरिगमपधनिस । सनिधपमगरिस ॥ इत्युद्ग्राहः ॥

इति तोडी ॥ १२ ॥

छायातोडी तथैव स्यान्निपाभ्यां रहिता सदा ।
सरिगम धसधम गरिस ॥ इत्युद्ग्राहः ॥

इति छायातोडी ॥ १३ ॥

षड्जादिमूर्छनायुक्ता भैरवी स्याद्धकोमला ।
सरिगमपधनिस । निधपमगरिस ॥ इत्युद्ग्राहः ॥

इति भैरवी ॥ १४ ॥

घंटारागो गपूर्वः स्यादन्तः कोमलधैवतः ।
गमपधनिस । सनिधपमगरिस निध ॥ इत्युद्ग्राहः ॥

इति घंटानादः ॥ १५ ॥

रिकोमला गतीव्राद्या कोमलीकृतधैवता ।
नितीव्रेणापि संयुक्ता वराटीधैवतादिका ॥
धधनिस रिगमपम पमरिस ॥ इत्युद्ग्राहः ॥

इति वराटिका ॥ १६ ॥

खंबावती पहीना स्यात्कोमलीकृतधैवता ।
गांधारमूर्छनायुक्ता रिणा त्यक्तावरोहिका ॥
गमधनिस रिस निधगगमगगस ॥ इत्युद्ग्राहः ॥

इति खंबावती ॥ १७ ॥

धकोमला नितीव्राद्या षड्जपूर्वकमूर्छना ।
धगयोः कंपसंयुक्ता सपांशाभीरिका मता ॥
सरिगमपधनिस । सनिधपमगरिस ॥। इत्युद्ग्राहः ॥

इति आभीरिका ॥ १८ ॥

रजनीमूर्छनायुक्ता रिकोमलधकोमला ।
गतीव्रा सा नितीव्रा च गौरीन्यंशस्वरा मता ।
आरोहे यदि गांधारो मध्यमावधिमूर्छना ॥
रिमपनिस निधपम गरिगस ॥ इत्युद्ग्राहः ॥

इति गौरी ॥ १९ ॥

मस्तु तीव्रतरो यस्मिन् गनी तीव्रावितीरितौ ।
गांधारोद्ग्राहकल्याणे मन्यारोहे न तिष्ठतः ॥
गपधस गरिस सनिधप पधप मगरिस ॥ इत्युद्ग्राहः ॥

इति कल्याणः ॥ २० ॥

रिकोमला गतीव्रा या मतीव्रतरसंयुता ।
धकोमला नितीव्रा च ख्याता रामकरीति सा ।
आरोहे मनिवर्ज्या स्यात्पांशा धैवतमूर्छना ॥
गपधस सनिधप मपमगरिस ॥ इत्युद्ग्राहः ॥

इति रामकरी ॥ २१ ॥

अतितीव्रतमो गः स्यान्मस्तु तीव्रतरो मतः ।
धस्तु तीव्रतरो निः स्यात्तीव्रः षड्जादिमूर्छना ।
सन्यासे मध्यमांशे च रागे सारंगसंज्ञके ॥
सरिगमपधनिस । सनिधपमगरिस ॥ इत्युद्ग्राहः ॥

इति सारंगः ॥ २२ ॥

मालवी ( पारिजातांत "मालव" नांव आहे ), गुणक्री, ककुभा ( "मालवस्वरसंभूता ककुभा षड्जमूर्छना" असें लक्षण लिहिलें तें पारिजाताचें नाहीं ), वेलावली ( "वेलावल्यां गनी

---

टीपः—आतां पारिजातांतलीं लक्षणें येथें उगीच अधिक उतरून घेण्यांत विशेषसा अर्थ नाहीं. या ग्रंथांत आणखी किती राग उतरून घेतले आहेत, तें सांगितलें म्हणजे पुरे.

तीव्रौ मूर्छना चाभिरुद्धता । अवरोहे गवर्जायां कचिद्गांधारमूर्छना" । असें घेतलें ), केदारी, कामोदी ( पारिजातांतली तिसरी ओळ सोडून दिली ), दीपक, देशाख्य: ( तिसरी ओळ सोडली ), पटमंजरी, वसंत, ललित, कानडी, बहुली ("गौरीमेला धनाढ्या सा बहुली मध्यमोज्झिता । आरोहणे निहीनोक्ता गांधारोद्ग्राहपांशका"। असें लक्षण लिहिलें ), मुखारी ( तिसरी ओळ सोडली ), गुर्जरी, ( लक्षणांत "धैवतश्लिष्टनिस्त्वरा" असें म्हटलें ), उत्तरागुर्जरी, भूपाली, मेघ, मल्हारी, सौराष्ट्री, देशकारी ( दुसरा चरण पारिजातांतल्याप्रमाणें येथेंहि नाहीं ), रेवा, गौळ, हिंदोल, देशी, टक्का, नाट, आसावरी, सावेरी, सालंग, भैरव, श्रीराग, नारायणी, पहाडी, विहंगडा, पूर्वी, सामंत, नटनारायण, केदारगौळ ("केदारगौळ: श्रीरागात्संभूतोद्ग्राहनिस्वरः । रिन्यासांशसपैर्युक्त आरोहे गधवर्जितः" । असें लक्षण लिहिलें ), कर्णाटगौळ ("कर्णाटगौळः सामंतजन्यो रिस्वरमूर्छनः । वर्जितश्च धगाभ्यां स तथारोहावरोहयोः" । असें लक्षण केलें ), रीतिगौळ, नारायणगौळ, ( लक्षणांत "श्रीरागस्वरसंभवे" असें म्हटलें—पारिजातांत "तीव्रगांधारसंयुते" ), मालवगौळ, पंचम, विभास, मंगलकोश, नादरामक्री, शंकराभरण, सालंगनाट, गौंड, शुद्धवराटी, त्रिवणी, वराडी, नागवराळी, पुन्नागवराळी, प्रतापवराळी, कल्याणवराळी, कुरंग, सौदामिनी, वैजयंती, हंस, कोकिल, सुरालय, अर्जुन, ऐरावत, कंकण, रत्नावली, कल्पतरु, सोरटी, मारु, कुमुद, चक्रधर, सिंहरव, मंजुघोषा, शिववल्लभा, मनोहर.

इति रागलक्षणानि ।

स्मृतेर्विषयतां प्राप्य उपेक्षाग्रहणं यदि ।
याति तत्र प्रसंख्या हि संगतिः शास्त्रसंमता ॥
तत्संगत्या कृतान्यत्र रागाणां लक्षणानि वै ।
क्रमव्यतयता तोऽत्र न दोषाय भवेदिह ॥
मध्यस्थाष्टश्रुती प्रोक्तौ समौ पूर्वोत्तरौ सदा ।
मध्यस्थाष्टश्रुती प्रोक्तौ सपावुत्तरपश्चिमौ ॥
सपौ पूर्वोत्तरौ ज्ञेयौ मध्यस्थद्वादशश्रुती ।
कोमलाख्यौ रिधौ स्यातां मध्यस्थद्वादशश्रुती ॥
गनी शुद्धाभिधौ तौस्तो मध्यस्थद्वादशश्रुती ।
तीव्रौ गनी च विज्ञेयौ मध्यस्थद्वादशश्रुती ॥
मतीव्रतरसंज्ञस्य कोमलस्यर्षभस्य च ।
द्वादशश्रुतयो मध्ये ज्ञेया लक्ष्मविचक्षणैः ॥
श्रुत्येकादशकौ मध्ये ज्ञेयौ पंचमरिस्वरौ ॥
कोमलाभिधधस्यापि शुद्धगांधारसंज्ञिनः ।
श्रुतीरेकादशैवाहुर्मध्ये लक्षणकोविदाः ॥
शुद्धतीव्रौ धगौ ज्ञेयौ मध्यस्थैकादशश्रुती ।
निषादमध्यमौ ज्ञेयौ मध्यस्थद्वादशश्रुती ।
त्रयोदशश्रुती मध्ये तीव्रतीव्रतरौ निमौ ।
समानश्रुतिकानां च शुद्धानां च परस्परम् ।
समानश्रुतिकानां च विकृतानां परस्परम् ॥
द्वादशश्रुतिभिर्मध्ये व्यवधानं भवेदिति ।
उक्तशेषस्वरान्सर्वान्मध्यस्थाष्टश्रुतीन् जगुः ॥
समानश्रुतिकान् शुद्धान् विकृतांश्चापि कोविदाः ।
सप्तभिर्नवभिर्वापि श्रुतिभिः प्राप्तमध्यगान् ॥

विषमश्रुतिकान् शुद्धान् विकृतान् कोविदा जगुः ।
मध्यमे मेरुसंस्थेऽस्मिन् मध्यमग्रामसंभवः ।
यदा तदैव तास्तिस्रः श्रुतीर्याति स पंचमः ॥
निषादं त्रिश्रुतिं तत्र ब्रूयुर्लक्षणकोविदाः ।
अन्येऽपि श्रुतिभिर्युक्ताः सग्रामस्थस्वरा इव ॥
रिमैकैकश्रुतिं प्राप्य यदा गो मेरुगो भवेत् ।
गांधारग्राम आख्यातस्तिसृभिः श्रुतिभिः परे ॥
मपधास्तत्रयुक्ताः स्युः षड्जोऽपि तिसृभिर्युतः ।
चतुःश्रुतिनिषादोऽथहृतश्रुतिर्धसो यतः ।
ऋषभो द्विश्रुतिर्ज्ञेयो गांधारेण हृतश्रुतिः ।
गांधारमध्यमग्रामौ यदि भ्रांत्या प्रकल्पितौ ।
तर्हि तल्लक्षणं प्रोक्तमर्थांगीकारमात्रतः ॥
षड्जग्रामान्यथासिद्धेः फलाभावाद्यतस्तयोः ।
हनूमान् स्वयमप्याह नतौ ग्रामौ मताविति ॥
श्रुतयो द्वादशैवात्र स्वरस्थानतयोदिताः ।
तथोक्ता वारिताः सर्वाऽस्वरस्थानतयादिशेत् ॥
न श्रुतिस्थस्वरोत्पन्नप्रस्तारप्राप्तमेलजान् ।
युक्तोद्ग्राहयुजो रागान् कल्पयन्तु मनस्विनः ॥
संवादिनौ न चेदुक्तस्थानगौ शुद्धकोमलौ ।
धौ यवार्धयवाभ्यां हि कार्यौ न्यूनौ विचक्षणैः ॥
भरतादिमुनीन्द्राणामभिप्रायविदा मया ।
लक्षणानि कृतान्यस्मिन्सूरिसंमोदसिद्धये ॥
नव त्रयोदशाप्यन्ये श्रुतीर्मध्यव्यवस्थिता ।
आहुः संवादिनां क्षेत्रविवेकज्ञानसंभवाः ॥
चतुर्भिस्तौ सरीप्रोक्तौ गनीद्वाभ्यां व्यवस्थितौ ।
चतुर्भिः पमधा युक्ता एवं श्रुतिविनिर्णयः ॥

अन्यांश्च विकृतान् कुर्यात् श्रुतिक्षेत्रविभागतः ।
प्रत्यक्षमानसिद्धार्थे शाब्दबोधपटुर्भवेत् ॥
एवं चोभयपक्षज्ञज्ञातमेलसमुद्भवाः ।
अनंता अपि रागाः स्युर्गमकोद्ग्राहभेदतः ॥

इतिश्री श्रीनिवासकृतरागतत्त्वविबोधः समाप्तः ॥

॥ श्रीरस्तु ॥

॥ श्रीः ॥

श्रीनिवासपंडितविरचितः

# रागतत्त्वविबोधः ।

एतत्पुस्तकम्

पुण्यपत्तनस्थपंडितदत्तात्रेयकेशवजोशीत्यभिधेन

यथामति संशोधितम् ।

तच्च

## भालचन्द्रशर्मणा

आर्यभूषणाख्यमुद्रालये मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतम् ।

शकः १८४० सन् १९१८

अस्य ग्रन्थस्य मुद्रणे यद्धनमपेक्षितं तत्सकलमपि
श्रीमन्महीशूरयुवराजमहाशयैः ' सर के. नरसिंह-
राज वडियार जी. सी. आय्. ई. '
इति लक्षणांकितैः परमो-
दारचरितैरदायि ।

Printed at the Arya-Bhushan Press, Poona, City.
by Anant Vinayak Patvardhan,

AND

Published by Bhalchandra Sitaram Sukthankar, M. A. LL. B.,
at 2 Malabar Hill, Bombay.

# प्रस्तावना.

आर्यसंगीतसंस्कृतग्रंथकारांमध्यें श्रीनिवासपंडिताचें नांव फारसें ऐकण्यांत येत नाहीं; याचा रागतत्त्वविबोध हा एकच ग्रंथ सध्यां उपलब्ध आहे.

ग्रंथकारानें या ग्रंथांत आपली व आपल्या वाडवडिलांची माहिती, तसेंच आपलें ठावठिकाण, आपले आश्रयदाते यांसंबंधाचा उल्लेख कोठेंहि केला नाहीं; त्यामुळें हा ग्रंथकार केव्हां झाला व तो कोठें प्रसिद्धि पावला ह्याबद्दल आज कांहींच सांगतां येत नाहीं.

त्याचा हा ग्रंथ म्हणजे अहोबलपंडिताच्या संगीतपारिजात ग्रंथांतील स्वर व रागप्रकरणांची संकलितआवृत्तिच आहे असें म्हटल्यास फारसें वावगें होईलसें वाटत नाहीं.

अहोबलपंडित हा सतराव्या शतकाच्या पूर्वार्धांत झाला असावा हें अनुमान बऱ्याचश्या पुराव्यावरून निघूं शकतें, तेव्हां सदर श्रीनिवास पंडित हा सतराव्या शतकाच्या उत्तरार्धांत झाला असें मानणें फारसें चुकीचें होणार नाहीं.

श्रुतिस्वरांची अभिन्नता स्पष्टपणें सांगणें, शुद्ध व विकृत मिळून द्वादश स्वरांचीं स्थानें तारेच्या लांबीनें नमूद करणें वगैरे पारिजातकाराच्या विशेष गोष्टींचा उल्लेख ह्या ग्रंथकारानें प्रमुखपणें करून पारिजातकाराचे राग कांहीं त्याच्या शब्दानें व कांहीं आपल्या शब्दानें नमूद केले आहेत. श्रीनिवासाचें प्राचीन संगीतशास्त्राचें ज्ञान अगदींच बेताचें होतें असें त्याच्या ग्रंथावरून सहज दिसून येतें; उदाहरणार्थ—पारिजातांतील गौरी रागाचें लक्षण व सदर ग्रंथांतील गौरी रागाचें लक्षण हीं ताडून पाहिलीं असतां आमच्या म्हणण्याची सत्यता सहजीं कळून येईल.

पारिजातांत उद्ग्राह, स्थायी, संचारी व मुक्तायी असे भाग करून स्वरविस्तार लिहिले आहेत. तेच ग्रंथकारानें येथें उतरून घेतले आहेत; पण वाचकांस त्यांचा विशेषसा उपयोग होणार नाहीं म्हणून ते सर्व न देतां नुसता त्यांपैकीं उद्ग्राह हा भाग दिला आहे, ग्राम व स्वर यांविषयीं यानें आपलें मत स्पष्ट नमूद केलें आहे; व तसेंच पारिजातकाराची भाषा जेथें संदिग्ध होती तो भाग ह्यानें आपल्या भाषेनें स्पष्ट करून दाखविला आहे हें त्याच्या शुद्धस्वरस्थानांकडे पाहिलें असतां सहज दिसून येईल.

एकंदरींत हा ग्रंथ उत्तरपद्धति समजून घेणारास बराच उपयोगी होईल असें आमचें मत आहे.

सदर ग्रंथाची हस्तलिखितप्रत आमचे मित्र डॉ. वि. सी. सुकथनकर, एम्. ए., पीएच्. डी. यांनीं मिळवून दिल्याबद्दल आम्ही त्यांचे फार आभारी आहों.

पुणें<br>ता० २२।६।१८ } पं. दत्तात्रेय केशव जोशी.

॥ श्रीः ॥

# रागतत्त्वविबोधः ।

श्रीगणेशाय नमः ।

नत्वा लक्ष्मीपतिं देवं भरतादिमुनीनपि ।
रागतत्त्वविबोधाय वक्ष्ये संगीतलक्षणम् ॥ १ ॥
सकलाः सकला विद्याः श्रीनिवासो विभाव्य च ।
कलारत्नस्य गानस्य तत्त्वतो लक्षणं ब्रुवे ॥ २ ॥
नृत्यवाद्यविशेषाभ्यां गानं चेदुपबृंहितम् ।
तदा संगीतमित्याहुर्लक्ष्यलक्षणकोविदाः ॥ ३ ॥
गीतवादित्रनृत्यानां यस्मादंग्यंगता भवेत् ।
गानं केवलमप्याहुः संगीतं लक्ष्यवेदिनः ॥ ४ ॥
गानोपयोगिनां तावदुद्देशः क्रियतेऽधुना ।
अनिष्टाननुबंधीष्टसाधनत्वे विवेकतः ॥ ५ ॥
प्रवर्तन्ते जनाः सर्वे इति शास्त्रविनिश्चयः ।
महानिष्टानुबंधीष्टसाधनत्वाविवेकिनाम् ॥ ६ ॥
कथं भवेन्निषिद्धत्वात् प्रवृत्तिर्गानकर्मणि ।
प्रदृश्यन्ते मया वेदाः पूर्वपक्षार्थसिद्धये ॥ ७ ॥

तस्माद्गायन्तं स्त्रियः कामयन्ते कामुका एनं स्त्रियोभवन्ति । तस्माद्गायन्तस्य मत्तस्य न प्रतिगृह्यम् । यत्प्रतिगृह्णीयात् । समबलं प्रतिगृह्णीयात् । इति गाननिषेधप्रतिपादकश्रुतयः ॥ तथा विधेश्च सिद्धत्वात्तात्पर्यं मृग्यतेऽधुना । अपवाये तस्मात् श्रीराष्ट्रं क्रामति।योऽश्वमेधेन जायते । ब्राह्मणौ वीणा गाथिनौ

गायतः श्रिया वा एतद्रूपं यद्वीणा । श्रियमेवास्मिंस्तद्धतः । यदा खलु वै पुरुषः । श्रियमश्नुते वीणास्मै वाद्यते । तदाहुः । यदुभौ ब्राह्मणौ गायेताम् । प्रभ्रष्टकास्माद्यीस्मात् न वै ब्राह्मणो श्रीरमते इति । ब्राह्मणोऽन्यो गायेत् । राजन्योऽन्यः । ब्रह्म वै ब्राह्मणः । क्षत्रो राजन्यः । तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतः परिगृहीता भवति । तदाहुः । यदुभौ दिवा गायेताम् । अपास्माद्राष्ट्रं कामेत् । न वै ब्राह्मणे राष्ट्रं रमेत् । इति । यदा खलु वै राजा कामयते । अथ ब्राह्मणं जिनाति । दिवा ब्राह्मणो गायेत् । नक्तं राजन्यः । ब्रह्मणो वै रूपमहः । क्षत्रियस्य रात्रिः । तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतो राष्ट्रं परिगृहीतं भवति । इत्यददाह इत्ययजथा इत्यपचत इति । ब्राह्मणो गायेत् । इष्टापूर्तं वै ब्राह्मणस्य इष्टापूर्तेनैवैनं स समर्धयति । इत्यजिना इत्ययुध्यथा इत्यमुं संग्राममहन्निति राजन्यःयुध्यं वै राजन्यस्य । युद्धेनैवैनं समर्धयति । अक्लृप्ता वा एतस्यर्तव इत्याहुः । योऽश्वमेधेन यजत इति । तिस्रोन्यो गायति । तिस्रोन्यः षट्संपद्यते । षड् वा ऋतवः । ऋतूनेवास्मै कल्पयतः ताभ्यां संस्थाभ्यां अनोयुक्तेश्च शते च ददाति । शतायुः पुरुषेन्द्रियः । आयुष्ये वैन्द्रिय प्रतिष्ठति । इति श्रुतयः ।

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं निगच्छति ॥ ८ ॥

इति याज्ञवल्क्यस्मृतिः ।

शृण्वन् सुभद्राणि रथांगपाणे–
जन्मानि कर्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन् विलज्यो विचरेदसंगः ॥ ९ ॥

नाहं वसामि वैकुंठे योगिनां हृदये रवौ ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥ १० ॥

इति भागवतादिवचनानि ।

असद्गानपराः सर्वा निदास्ता वैदिका मताः ।
ईश्वरो गीयते यस्मै तद्गानं वेदबोधितम् ॥ ११ ॥
संगीतं ध्वनिसंभूतिः श्रुतयो जातयस्तथा ।
शुद्धाः स्वरा विकाराद्याः स्वरस्थानानि सर्वशः ॥ १२ ॥
संवाद्यादि स्वराणां च भेदा ग्रामस्य लक्षणम् ।
मूर्छना लक्षणं चापि गमकानां च लक्षणम् ॥ १३ ॥
रागमेलाश्च सर्वेऽपि संपूर्णत्वादिभेदिनः ।
तत्तन्मेलस्थरागाणां भेदकारणलक्षणम् ॥ १४ ॥
ताना उद्ग्राहभूताश्च स्थायी तानाः सुनिर्मलाः ।
संचारीतानकथनं समाप्तिद्योतकं तथा ॥ १५ ॥
एतावंतश्च वस्तूनि ग्रंथेऽस्मिन्कथितानि हि ।
आयुर्वेदेन संप्रोक्ता योगशास्त्रेण चोदिता ॥ १६ ॥
पिंडसंस्था मया नोक्ता पिष्टपेषणताभिया ।
नाभिहृत्कंठमूर्धास्यस्थानोत्पन्नो ध्वनिर्मतः ॥ १७ ॥
तिसृषूर्ध्वासु नाडीषु नाड्यस्तिर्यङ्समन्विताः ।
द्व्यधिका विंशतिस्ताभ्यः श्रुतयस्तत्समा मताः ॥ १८ ॥
जातयस्तत्र पंच स्युर्वक्ष्यमाणाभिधायुताः ।
स्वरेभ्यः श्रुतयोऽभिन्नाः श्रावणत्वेन हेतुना ॥ १९ ॥
अहिकुंडलवत्तत्र व्यवहारोऽपि युज्यते ।
सजातिश्रुतिनामानि ब्रुवे शिक्षोक्तमार्गतः ॥ २० ॥
अथ दीप्ता च तीव्रायां कुमुद्वत्यां तथायता ।
मंदायां च मृदुर्ज्ञेया मध्या छंदोवतीश्रिता ॥ २१ ॥
करुणा च दयावत्यां मध्या सा रंजनी स्मृता ।
रक्तिकायां भवेज्जातिर्मृदुसंज्ञा ततः परम् ॥ २२ ॥
रौद्र्यां दीप्ता च क्रोधायामायताख्या प्रकीर्तिता ।
वज्रिकायां तु दीप्ता स्यात् प्रसारिण्यां तथायता ॥ २३ ॥

प्रीत्यां श्रुत्यां मृदुः प्रोक्ता मध्या सा मार्जनीश्रिता ।
क्षित्यामुक्ता मृदुर्जातिर्मध्या रक्ता समाश्रिता ॥ २४ ॥
संदीपिन्यां तथा श्रुत्यामायता जातिरीरिता ।
आलापिन्यां तथा श्रुत्यां करुणाजातिरुच्यते ॥ २५ ॥
मदंत्यां करुणा ज्ञेया रोहिण्यामायता स्थिता ।
रम्यां मध्याश्रिता जातिरिति सूरिविनिश्चयः ॥ २६ ॥
उग्रायां च भवेद्दीप्ता मध्या तां क्षोभिणीं श्रिता ।
इक्षुक्षीरगतं यद्वन्माधुर्यं नोच्यते जनैः ॥ २७ ॥
तद्वत् श्रुतिगता जातिर्वाचा को वा वदिष्यति ।
श्रोत्रप्रत्यक्षसिद्धास्ता भिन्नश्रुतिसमाश्रिताः ॥ २८ ॥
परस्परं स्वसादृश्यं जातयः समुपाश्रिताः ।
अवांतरभिदा युक्ता जातिभेदैश्च शोभिताः ॥ २९ ॥
स्वरस्थाने क्रियाभेदैर्वैचित्र्यं जायते बहु ।
जातिभेदे समव्याप्तं यत्तज्ज्ञेयं मनीषिभिः ॥ ३० ॥

इति श्रुतिजातिविवेकः ।

चतुःश्रुतिसमायुक्ताः स्वराः स्युः समपाभिधाः ।
गनी श्रुतिद्वयोपेतौ रिधौ त्रिश्रुतिकौ मतौ ॥ ३१ ॥
स्वतो रंजयति स्वान्तं यः स नादः स्वरो मतः ।
निषादर्षभगांधारषड्जमध्यमधैवताः ॥ ३२ ॥
पंचमश्चेत्यमी सप्त तंत्री कंठोत्थिताः स्वराः ।
इत्यादीनि च नामानि स्वराणामुदितानि हि ॥ ३३ ॥
वीणायास्ते स्वराः कंठात्प्रभवन्ति सुखप्रदाः ।
शिख्यादिध्वनिसंघास्ते तेषां मध्ये परस्परम् ॥ ३४ ॥
षड्जादित्वमुपेताः स्युरिति भावो मयोदितः ॥

---

## अथ स्वरस्थानलक्षणम् ।

### अथ शुद्धस्वराः ।

स्वरस्य हेतुभूताया वीणायाश्चाक्षुषत्वतः ।
तत्र स्वरविबोधार्थं स्थानलक्षणमुच्यते ॥ ३५ ॥
पूर्वांत्ययोश्च मेर्वोश्च मध्ये तारकसः स्थितः ।
तदर्धेत्वातितारस्य सस्वरस्य स्थितिर्भवेत् ॥ ३६ ॥
मध्यस्थानादिमषड्जमारभ्यातारषड्जगम् ।
सूत्रं कुर्यात्तदर्धे तु स्वरं मध्यममाचरेत् ॥ ३७ ॥
भागत्रयसमायुक्तं तत्सूत्रं कारितं भवेत् ।
पूर्वभागद्वयादग्रे स्थापनीयोऽथ पंचमः ॥ ३८ ॥
षड्जपंचममध्ये तु गांधारस्थानमाचरेत् ॥
षड्जपंचमगं सूत्रमंशत्रयसमन्वितम् ।
तत्रांशद्वयसंत्यागात् पूर्वभागे तु रिर्भवेत् ॥ ३९ ॥
पंचमोत्तरषड्जाख्यमध्ये धैवतमाचरेत् ॥
पसयोर्मध्यभागे स्यात् भागत्रयसमन्विते ।
पूर्वभागद्वयं त्यक्त्वा निषादो राजते स्वरः ॥ ४० ॥

इति शुद्धस्वराः ।

---

### अथ विकृतस्वराः ।

भागत्रयोदिते मध्ये मेरोर्ऋषभसंज्ञितात् ।
भागद्वयोत्तरं मेरोः कुर्यात् कोमलरिस्वरम् ॥ ४१ ॥
मेरुधैवतयोर्मध्ये तीव्रगांधारमाचरेत् ॥
भागत्रयविशिष्टेऽस्मिन् तीव्रगांधारषड्जयोः ।
पूर्वभागोत्तरं मध्ये मं तीव्रतरमाचरेत् ॥ ४२ ॥
भागत्रयान्विते मध्ये पंचमोत्तरषड्जयोः ।
कोमलो धैवतः स्थाप्यः पूर्वभागे विवेकिभिः ॥ ४३ ॥

तथैव धसयोर्मध्ये भागत्रयसमन्विते ।
पूर्वभागद्वयादूर्ध्वं निषादं तीव्रमाचरेत् ॥ ४४ ॥

---

ऋषभः शुद्ध एवासौ पूर्वगांधार इष्यते ।
गांधारः शुद्ध एवासौ रिस्तीव्रतर इष्यते ॥ ४५ ॥
अतितीव्रतमो गः स्यान्मध्यमः शुद्ध एव हि ।
धैवतः शुद्ध एवासौ निषादः पूर्वसंज्ञकः ॥ ४६ ॥
निषादः शुद्ध एवासौ धस्तीव्रतर इष्यते ॥

इति विकृतस्वराः ।

इति स्वरस्थानलक्षणम् ।

स्वरज्ञानविहीनेभ्यो मार्गोऽयं दर्शितो मया ।
स्वरसंवादिता ज्ञानं स्वरस्थापनकारणम् ॥ ४७ ॥
यतः संवादिनां तेषां ततो लक्ष्म मयोच्यते ।
द्वादशश्रुतिभिस्ते स्युरष्टाभिः समपाभिधाः ॥ ४८ ॥
व्यवधानमिता यस्मात्तस्मात्संवादिनः स्मृताः ।
अमात्यः स्यात्तु संवादी वादी राजसमो मतः ॥ ४९ ॥
भृत्यतुल्योऽनुवादी स्याद्विवादी शत्रुवद्भवेत् ।
वादी राजन्ययोगः स्यात्प्रयोगे बहुलत्वतः ॥ ५० ॥
अमात्याः स्युः स्वरा रक्तिकारणातिसमन्विताः ।
परोपजीविहेतुत्वं रक्तिं प्रति सभृत्यवत् ॥ ५१ ॥
रक्तिविच्छेदकारित्वाद्विवादित्वं स्वरो गतः ॥

इति वाद्यादिलक्षणम् ।

स्वरः स्वोत्तरगामी चेत्तीव्रादिवचनोदितः ।
स्वरोऽग्रिमश्रुतिं याति तीव्रसंज्ञां प्रयात्ययम् ॥ ५२ ॥
स्वरोऽग्रिमश्रुती याति तदा तीव्रतरो भवेत् ।
स्वरोऽग्रिमश्रुतीर्याति तदा तीव्रतमो मतः ॥ ५३ ॥

चतस्रः श्रुतयो यस्मिन्नधिकाः स्युर्यदा स्वरः ।
अतितीव्रतमश्चेति आप्नोतीति बिदो जगुः ॥ ५४ ॥
स्वरः पश्चान्निवृत्तश्चेत् कोमलादिभिरीरितः ।
एकः श्रुतिपरित्यागात्स्वरः कोमलसंज्ञकः ॥ ५५ ॥
श्रुतिद्वयपरित्यागात् पूर्वशब्देन भण्यते ॥

इति स्वरसंज्ञाप्रकारः ।

गांधारमध्यमग्रामावप्रयोजनकौ मतौ ॥
आरोहणावरोहाभ्यां स्वरा ये सरिगादयः ।
मूर्छिताः स्युः क्रमात्तेषां षड्जग्रामत्वयोग्यता ॥ ५६ ॥
आरोहश्चावरोहश्च स्वराणां जायते यदा ।
तां मूर्छनां तदा लोक आहुर्ग्रामाश्रयां बुधाः ॥ ५७ ॥
सप्तसंख्यायुतास्ताः स्युस्तासां नामानि कुर्महे ।
तत्र तूत्तरमंद्राद्या षड्जपूर्वकसंभवा ॥ ५८ ॥
द्वितीया रजनी प्रोक्ता निषादस्वरपूर्विका ।
धैवतादिस्वरोद्भूता तृतीयाचोत्तरायता ॥ ५९ ॥
चतुर्थी शुद्धषड्जा स्यात्पंचमादिस्वरोद्भवा ।
मत्सर्याद्याकृताख्या सा पंचमी मध्यमोत्थिता ॥ ६० ॥
अश्वक्रांतानुषड्जा स्याद्गांधारादिस्वरोदिता ।
ऋषभादिस्वरोद्भूता सप्तम्याख्याभिरुद्गता ॥ ६१ ॥
आरोहश्चावरोहश्च तथैव विकृतेष्वपि ।
षाडवौडुवरीत्यात्र कुर्यादारोहणादिकम् ॥ ६२ ॥
मध्यषड्जं समारभ्य तदूर्ध्वस्वरमात्रजम् ।
पूर्वैकैकस्वरं त्यक्त्वा समारोहादिसंहताम् ॥ ६३ ॥
तथारोहणपूर्वस्य भेदा ज्ञेया मनीषिभिः ।
स्वरातींद्रियधर्माणां कथने गौरवं भवेत् ॥ ६४ ॥

इति मत्वा न ते प्रोक्ता अन्यग्रंथोदिता यतः ।
गौरवादेवमेवादिकीर्तनं न कृतं मया ॥ ६५ ॥
इति ग्राममूर्छनाप्रकरणम् ।

---

## अथ गमकाः ।

क्रियाविशेषजन्यो यस्तद्धर्मो गमको भवेत् ।
गमयन्ति हि तद्रक्तिं तस्मात्ते गमका मताः ॥ ६६ ॥
दक्षिणांगुलिसंबद्धतंत्रीजन्योऽतिनिश्चलः ।
कंपादिरहितत्वेन स्वरः कैवल्यमश्नुते ॥ ६७ ॥
स्वरो हुंशब्दसादृश्यात् हुंकृतः परिकीर्तितः ।
स्फालनस्थानविज्ञाताज्ञातमध्यबहुस्वरः ॥ ६८ ॥
पुनरग्रे समुद्भूतोप्येकास्फालनसंभवः ।
शारीरोऽपि स हुंशब्दो हृन्यस्ते चिबुके भवेत् ॥ ६९ ॥
उन्नतस्थानसंजातोऽप्यधो गच्छति यः स्वरः ।
अधः पुनः समुद्भूतोऽज्ञातमध्यगतस्वरः ॥ ७० ॥
एकास्फालनसंभूतश्चावितस्वर उच्यते ।
च्यवनं जायते यस्मात्तस्मात्तेच्याविता मताः ॥ ७१ ॥
शारीरोऽपि सविज्ञेयो वदनोत्क्षेपणोद्भवः ।
एकत्रास्फालनादेव सर्वे ते बोधिता यदा ॥ ७२ ॥
स्वरौ नष्टावभिव्याप्य तदोद्घर्षणमुच्यते ।
अवघर्षमप्येवं ज्ञेयं लक्ष्मविचक्षणैः ॥ ७३ ॥
विकर्षणं तदेव स्यात् स्वस्थानेऽन्यो विकृष्यते ।
स्वरस्याभिभवं नैस्न्यमंगुल्याहुर्मनीषिणः ॥ ७४ ॥
इतिपूर्वाहताख्यः स्यात्तथैवान्वर्थनामकः ।
हताहत इति ख्यातो इत्यैकत्रस्वरद्वयम् ॥ ७५ ॥
हतो ताराहताख्योऽपि गमकोऽन्वर्थशोभितः ।
चतुर्थांशोऽपरेभ्योऽसौ द्रुतस्य तिरिपो भवेत् ॥ ७६ ॥

श्रुतिकालविभागेन एवं बहुविधा मताः ।
एकत्र मन्यते यस्तु द्विवारं स द्विराहतः ॥ ७७ ॥
आरोहणावरोहाभ्यां द्विधा स परिकीर्तितः ।
स्वरद्वयमभिव्याप्य वामहस्तांगुलिक्रिया ॥ ७८ ॥
भवेदूर्ध्वमधो याति तज्ज्ञो ढालुरुदाहृतः ।
स्वरत्रयमभिव्याप्य सुढालुः पूर्ववद्भवेत् ॥ ७९ ॥
यत्रैकहननादूर्ध्वं तत्रैवानाहताः स्वराः ।
शांतसंज्ञायुतास्ते स्युः स्फुरिताः सूरिनिर्णयः ॥ ८० ॥
हुंफितस्यैकदेशित्वान्मुदा न पृथगुच्यते ।
अग्रे गत्वा निवृत्तोऽसौ पुनः स्वस्थान उच्यते ॥ ८१ ॥
पश्चाद्गत्वा निवृत्तोऽसौ अग्रस्वस्थानसंस्थितः ।
एवं लक्षणसंयुक्ता गमका बहवो मताः ॥ ८२ ॥
न ते मयोदिता ग्रंथविस्तरातिभियाऽधुना ॥

इति गमकाः ॥

---

## अथ मेललक्षणम् ।

मेलः स्वरसमूहः स्याद्रागव्यंजनशक्तिमान् ।
श्लिष्टोच्चारणमेवात्र समुदायः प्रकीर्तितः ॥ ८३ ॥
शुद्धैः स्वरैः समस्तैर्यो युक्तः संपूर्णशब्दभाक् ।
षड्भिः षाडव इत्युक्तः स्वरैः पंचभिरौडुवः ॥ ८४ ॥
एवं मेलस्त्रिधा प्रोक्तो विकृतैश्च स्वरैरिह ।
शुद्धसंपूर्णमेलस्य भेद एक उदाहृतः ॥ ८५ ॥
तत्रैकैकस्वरत्यागात् षाडवः षड्विधो मतः ।
पंचाधिकदशत्वं हि स्वरद्वयवियोगतः ॥ ८६ ॥

इति मेललक्षणम् ।

षाडवेषु च पूर्णेषु मेलेषु सकलेषु च ।
आरोहे चावरोहे च स्वरत्यागसमन्विताः ॥ ८७ ॥

मूर्छनाभेदसंपन्ना गमकादिव्यवस्थया ।
व्यवस्थिताः श्रुतिस्थानयोग्यजातिभिदायुजः ॥ ८८ ॥
रागा अप्यमिताः प्रोक्ता लक्ष्यलक्षणकोविदैः ॥
युगपद्द्वयविश्लिष्टाः स्वरयोरौडुवा यदि ।
न तथा रंजकास्ते स्युस्तथाप्यत्र मयोदिताः ॥ ८९ ॥

इत्येकैकषाडवसंपूर्णमेलेषु रागबाहुल्यकथनम् ॥

अथ शुद्धस्वरैरेव शुद्धैर्ये विकृतैरपि ।
निर्मिता विकृतैरेव तेषां लक्षणमुच्यते ॥ ९० ॥
आदावुद्गृह्यते येन स तानोद्ग्राहसंज्ञकः ।
आद्यंतयोश्चानियमस्ताने यत्र प्रजायते ॥ ९१ ॥
स्थायी तानः स विज्ञेयो लक्ष्यलक्षणकोविदैः ।
संचारी स तु विज्ञेयः स्थाय्यारोहविमिश्रितः ॥ ९२ ॥
यत्र रागस्य विश्रांतिः समाप्तिद्योतको हि सः ॥

---

## अथ रागलक्षणानि ।

शुद्धमेलोद्भवः पूर्णो धैवतादिकमूर्छनः ।
आरोहे गनिवर्ज्यः स्यात् रागः सैंधवनामकः ॥

धसरि मपम गरिस निधधस ॥ इत्युद्ग्राहः ॥
धसरि ममगरिरि पप्प मगरिरि नीधपमगरिरिग
रिसनिध धस ॥ इति स्थायी ॥ धससरिस
ममपपधसा मगरिरिगरिस निधपधमप धमपमा
गरिस रिममगरिरिपप्प मगरिरि
पमगरि मगरिगरिस रिस निध धसस्स ॥

इति संचारी ॥ सास्सधसा । रिमपनि धप मप धम पामपामगरि । गारिगारिसरी सनीधधसा । ॥ इति मुक्तायी ॥

इति सैंधवः ॥ १ ॥

नीलांबरी तु संपूर्णा षड्जपूर्वकमूर्छना ।
शुद्धमेले समुद्भूता बहुकंपमनोहरा ॥

सरिगमपधनिसा । निधपमगरिसा ॥ इतित्युद्ग्राहः ॥ गग्गगरि । ममरि ग ग गा रिगरीसरिस । ससपप्पमपप्प मपधनिधप मपधनिसा निधपमप धनिधप मपधनिमागग रिरिसरिस ॥ इति स्थायी ॥ ससरिग मपप्प निन्निनिधनि निधसस्सनिध । निन्निधप । धध्धपम । पप्पमगा मम्मरिम। गरिगसरिस ॥ इति संचारी ॥ ससपापमप धनिसा गारिसगा रिसानिधपमा । पमपमा । गागरिसा रिसा ॥ इति मुक्तायी ॥

इति नीलांबरी ॥ २ ॥

आरोहे रिधहीना स्यात्पूर्णा शुद्धस्वरैर्युता ।
गांधारस्वरपूर्वा स्यात् धनाश्रीर्मध्यमांतका ॥

गमपधनीस गरीसा निधपमागा गमपम गमगरिसा ॥इत्युद्ग्राहः।

इति संपूर्णधनाश्रीः ॥ ३ ॥

अथ तु धहीना सा रिधहीनापि सा मता ।

गमपनिसा रिपमगमगप निपमग गमगरिस । गमप गम गरिस गरिस रिस । पनिस गरिस रिस निस । ॥ इत्युद्ग्राहः ॥

इति षाडवधनाश्रीः ॥ ४ ॥

गमपनिस सनिपमग । मगमपगमगस । पनिस गसानिसपनि सस । गमगपम गा सममग । सगस निसस ॥ इत्युद्ग्राहः ॥

इति औडुवधनाश्रीः ॥ ५ ॥

रिहीना मालवश्रीः स्याच्छुद्धमेलस्वरोद्भवा ।
मध्यमादिस्वरोद्ग्राहा धांशयुक्तान्त्यपा स्मृता ॥
ममगसानिसा । पमप निनिस समगस निनि धप धप
ममपा ममागसा ॥ इत्युद्ग्राहः ॥

इति मालवश्रीः ॥ ६ ॥

गहीनो रक्तहंसः स्यात् आरोहे निस्वरोज्झितः ।
अवरोहे धवर्जः स्यात् षड्जपूर्वकमूर्छनः ॥
सरिमपधस सनिपमरिस ॥ इत्युद्ग्राहः ॥

इति रक्तहंसः ॥ ७ ॥

मोज्झितः कोल्हासः स्याद्गांधारादिकमूर्छनः ।
अवरोहे धवर्जः स्यात् षाडवः परिकीर्तितः ॥
गपधनिस रिगनिस निप गपगरिस ॥ इत्युद्ग्राहः ॥

इति कोल्हासः ॥ ८ ॥

षड्जादिमूर्छनोपेतः प्रसभः पंचमोज्झितः ।
सरिगमधनिस निधमगरिस ॥ इत्युद्ग्राहः ॥

इति प्रसभः ॥ ९ ॥

गधवर्जो मध्यमादिर्मध्यमादिकमूर्छना ।
मपनिस रिसरिस निसनिप मपनिपम पमरिम रिस ।
॥ इत्युद्ग्राहः ॥

इति मध्यमादिः ॥ १० ॥

रिणा युक्तः कोमलेन मेघनादस्तु षाडवः ।
सस्वरादिस्वरारब्धो मवर्ज्योऽपि रिगांशकः ॥
मरिग पधनिस सनिधप पगगगरिस ॥ इत्युद्ग्राहः ॥

इति मेघनादः ॥ ११ ॥

षड्जपूर्वा तु तोडी स्यात् यत्रोक्तौ कोमलौ रिधौ ।
धैवताख्यस्वरो न्यासो गांधारोंऽश इतीरितः ॥
सरिगमपधनिस । सनिधपमगरिस ॥ इत्युद्ग्राहः ॥

इति तोडी ॥ १२ ॥

छायातोडी तथैव स्यान्निपाभ्यां रहिता सदा ।
सरिगम धसधम गरिस ॥ इत्युद्ग्राहः ॥

इति छायातोडी ॥ १३ ॥

षड्जादिमूर्छनायुक्ता भैरवी स्याद्धकोमला ।
सरिगमपधनिस । निधपमगरिस ॥ इत्युद्ग्राहः ॥

इति भैरवी ॥ १४ ॥

घंटारागो गपूर्वः स्यादन्तः कोमलधैवतः ।
गमपधनिस । सनिधपमगरिस निध ॥ इत्युद्ग्राहः ॥

इति घंटानादः ॥ १५ ॥

रिकोमला गतीव्राद्या कोमलीकृतधैवता ।
नितीव्रेणापि संयुक्ता वराटीधैवतादिका ॥
धधनिस रिगमपम पमरिस ॥ इत्युद्ग्राहः ॥

इति वराटिका ॥ १६ ॥

खंबावती पहीना स्यात्कोमलीकृतधैवता ।
गांधारमूर्छनायुक्ता रिणा त्यक्तावरोहिका ॥
गमधनिस रिस निधगगमगगस ॥ इत्युद्ग्राहः ॥

इति खंबावती ॥ १७ ॥

धकोमला नितीव्राद्या षड्जपूर्वकमूर्छना ।
धगयोः कंपसंयुक्ता सपांशाभीरिका मता ॥
सरिगमपधनिस । सनिधपमगरिस ॥ इत्युद्ग्राहः ॥

इति आभीरिका ॥ १८ ॥

रजनीमूर्छनायुक्ता रिकोमलधकोमला ।
गतीव्रा सा नितीव्रा च गौरीन्यंशस्वरा मता ।
आरोहे यदि गांधारो मध्यमावधिमूर्छना ॥
रिमपनिस निधपम गरिगस ॥ इत्युद्ग्राहः ॥

इति गौरी ॥ १९ ॥

मस्तु तीव्रतरो यस्मिन् गनी तीव्राविती रितौ ।
गांधारोद्ग्राहकल्याणे मन्यारोहे न तिष्ठतः ॥
गपधस गरिस सनिधप पधप मगरिस ॥ इत्युद्ग्राहः ॥

इति कल्याणः ॥ २० ॥

रिकोमला गतीव्रा या मतीव्रतरसंयुता ।
धकोमला नितीव्रा च ख्याता रामकरीति सा ।
आरोहे मनिवर्ज्या स्यात्पांशा धैवतमूर्छना ॥
गपधस सनिधधप मपमगरिस ॥ इत्युद्ग्राहः ॥

इति रामकरी ॥ २१ ॥

अतितीव्रतमो गः स्यान्मस्तु तीव्रतरो मतः ।
धस्तु तीव्रतरो निः स्यात्तीव्रः षड्जादिमूर्छना ।
सन्यासे मध्यमांशे च रागे सारंगसंज्ञके ॥
सरिगमपधनिस । सनिधपमगरिस ॥ इत्युद्ग्राहः ॥

इति सारंगः ॥ २२ ॥

मालवी ( पारिजातांत " मालव " नांव आहे ), गुणक्री, ककुभा ( "मालवस्वरसंभूता ककुभा षड्जमूर्छना" असें लक्षण लिहिलें तें पारिजाताचें नाहीं ), वेलावली ( "वेलावल्यां गनी

---

टीपः—आतां पारिजातांतलीं लक्षणें येथें उगीच अधिक उतरून घेण्यांत विशेषसा अर्थ नाहीं. या ग्रंथांत आणखी किती राग उतरून घेतले आहेत, तें सांगितलें म्हणजे पुरे.

तीव्रौ मूर्छना चाभिरुद्धता । अवरोहे गवर्जोयां क्वचिद्गांधारमूर्छना" । असें घेतलें ), केदारी, कामोदी (पारिजातांतली तिसरी ओळ सोडून दिली ), दीपक, देशाख्य: ( तिसरी ओळ सोडली ), पटमंजरी, वसंत, ललित, कानडी, बहुली ("गौरीमेला धनाढ्या सा बहुली मध्यमोज्झिता । आरोहणे निहीनोक्ता गांधारोद्ग्राहपांशका"। असें लक्षण लिहिलें ), मुखारी ( तिसरी ओळ सोडली ), गुर्जरी, ( लक्षणांत "धैवतश्लिष्टनिस्वरा" असें म्हटलें ), उत्तरागुर्जरी, भूपाली, मेघ, मल्हारी, सौराष्ट्री, देशकारी ( दुसरा चरण पारिजातांतल्याप्रमाणें येथेंहि नाहीं ), रेवा, गौळ, हिंदोल, देशी, टक्का, नाट, आसावरी, सावेरी, सालंग, भैरव, श्रीराग, नारायणी, पहाडी, विहंगडा, पूर्वी, सामंत, नटनारायण, केदारगौळ ("केदारगौळः श्रीरागात्संभूतोद्ग्राहनिस्वरः । रिन्यासांशसपैर्युक्त आरोहे गधवर्जितः" । असें लक्षण लिहिलें ), कर्णाटगौळ ("कर्णाटगौळः सामंतजन्यो रिस्वरमूर्छनः । वर्जितश्च धगाभ्यां स तथारोहावरोहयोः" । असें लक्षण केलें ), रीतिगौळ, नारायणगौळ, ( लक्षणांत "श्रीरागस्वरसंभवे" असें म्हटलें—पारिजातांत "तीव्रगांधारसंयुते" ), मालवगौळ, पंचम, विभास, मंगलकोश, नादरामक्री, शंकराभरण, सालंगनाट, गौड, शुद्धवराटी, त्रिवणी, वराडी, नागवराळी, पुन्नागवराळी, प्रतापवराळी, कल्याणवराळी, कुरंग, सौदामिनी, वैजयंती, हंस, कोकिल, सुरालय, अर्जुन, ऐरावत, कंकण, रत्नावली, कल्पतरु, सोरटी, मारु, कुमुद, चक्रधर, सिंहरव, मंजुघोषा, शिववल्लभा, मनोहर.

इति रागलक्षणानि ।

स्मृतेर्विषयतां प्राप्य उपेक्षाग्रहणं यदि ।
याति तत्र प्रसंख्या हि संगतिः शास्त्रसंमता ॥
तत्संगत्या कृतान्यत्र रागाणां लक्षणानि वै ।
क्रमव्यतयता तोऽत्र न दोषाय भवेदिह ॥
मध्यस्थाष्टश्रुती प्रोक्तौ समौ पूर्वोत्तरौ सदा ।
मध्यस्थाष्टश्रुती प्रोक्तौ सपावुत्तरपश्चिमौ ॥
सपौ पूर्वोत्तरौ ज्ञेयौ मध्यस्थद्वादशश्रुती ।
कोमलाख्यौ रिधौ स्यातां मध्यस्थद्वादशश्रुती ॥
गनी शुद्धाभिधौ तौस्तो मध्यस्थद्वादशश्रुती ।
तीव्रौ गनी च विज्ञेयौ मध्यस्थद्वादशश्रुती ॥
प्रतीव्रतरसंज्ञस्य कोमलस्यर्षभस्य च ।
द्वादशश्रुतयो मध्ये ज्ञेया लक्ष्मविचक्षणैः ॥
श्रुत्येकादशकौ मध्ये ज्ञेयौ पंचमरिस्वरौ ॥
कोमलाभिधधस्यापि शुद्धगांधारसंज्ञिनः ।
श्रुतीरेकादशैवाहुर्मध्ये लक्षणकोविदाः ॥
शुद्धतीव्रौ धगौ ज्ञेयौ मध्यस्थैकादशश्रुती ।
निषादमध्यमौ ज्ञेयौ मध्यस्थद्वादशश्रुती ।
त्रयोदशश्रुती मध्ये तीव्रतीव्रतरौ निमौ ।
समानश्रुतिकानां च शुद्धानां च परस्परम् ।
समानश्रुतिकानां च विकृतानां परस्परम् ॥
द्वादशश्रुतिभिर्मध्ये व्यवधानं भवेदिति ।
उक्तशेषस्वरान्सर्वान्मध्यस्थाष्टश्रुतीन् जगुः ॥
समानश्रुतिकान् शुद्धान् विकृतांश्चापि कोविदाः ।
सप्तभिर्नवभिर्वापि श्रुतिभिः प्राप्तमध्यगान् ॥

विषमश्रुतिकान् शुद्धान् विकृतान् कोविदा जगुः ।
मध्यमे मेरुसंस्थेऽस्मिन् मध्यमग्रामसंभवः ।
यदा तदैव तास्तिस्रः श्रुतीर्याति स पंचमः ॥
निषादं त्रिश्रुतिं तत्र ब्रूयुर्लक्षणकोविदाः ।
अन्येऽपि श्रुतिभिर्युक्ताः सग्रामस्थस्वरा इव ॥
रिमैकैकश्रुतिं प्राप्य यदा गो मेरुगो भवेत् ।
गांधारग्राम आख्यातास्तिस्रभिः श्रुतिभिः परे ॥
मपधास्तत्रयुक्ताः स्युः षड्जोऽपि तिस्रभिर्युतः ।
चतुःश्रुतिनिषादोऽथहृतश्रुतिर्धसो यतः ।
ऋषभो द्विश्रुतिर्ज्ञेयो गांधारेण हृतश्रुतिः ।
गांधारमध्यमग्रामौ यदि भ्रांत्या प्रकल्पितौ ।
तर्हि तल्लक्षणं प्रोक्तमर्थांगीकारमात्रतः ॥
षड्जग्रामान्यथासिद्धेः फलाभावाद्यतस्तयोः ।
हनूमान् स्वयमप्याह नतौ ग्रामौ मताविति ॥
श्रुत्यो द्वादशैवात्र स्वरस्थानतयोदिताः ।
तथोक्ता वारिताः सर्वाऽस्वरस्थानतयादिशेत् ॥
न श्रुतिस्थस्वरोत्पन्नप्रस्तारप्राप्तमेलजान् ।
युक्तोद्ग्राहयुजो रागान् कल्पयन्तु मनस्विनः ॥
संवादिनौ न चेदुक्तस्थानगौ शुद्धकोमलौ ।
धौ यवार्धयवाभ्यां हि कार्यौ न्यूनौ विचक्षणैः ॥
भरतादिमुनीन्द्राणामभिप्रायविदा मया ।
लक्षणानि कृतान्यस्मिन्सूरिसंमोदसिद्धये ॥
नव त्रयोदशाप्यन्ये श्रुतीर्मध्यव्यवस्थिता ।
आहुः संवादिनां क्षेत्रविवेकज्ञानसंभवाः ॥
चतुर्भिस्तौ सरीप्रोक्तौ गनीद्वाभ्यां व्यवस्थितौ ।
चतुर्भिः पमधा युक्ता एवं श्रुतिविनिर्णयः ॥

अन्यांश्च विकृतान् कुर्यात् श्रुतिक्षेत्रविभागतः ।
प्रत्यक्षमानसिद्धार्थे शाब्दबोधपटुर्भवेत् ॥
एवं चोभयपक्षज्ञज्ञातमेलसमुद्भवाः ।
अनंता अपि रागाः स्युर्गमकोद्ग्राहभेदतः ॥

इतिश्री श्रीनिवासकृतरागतत्त्वविबोधः समाप्तः ॥

॥ श्रीरस्तु ॥